# संस्कृत-वार्ताः

दिनाङ्कः - 23-11-2020

प्रातः - 06: 55

**मुख्य-वार्ताः**

- **प्रधानमन्त्री ह्यः विंशति-सम्मेलने पर्यावरणपरिवर्तनानां विरुद्ध कथं योद्धव्यम् अस्मिन् विषये विशेषेण प्रावोचत्।**
- **प्रधानमन्त्रिणा नरेन्द्रमोदिना ह्यः उत्तरप्रदेशस्य विन्ध्याचल क्षेत्रान्तर्गतं मिर्जापुर-सोनपुर-जनपदयोः ग्रामीण-पेयजल-आपूर्ति परियोजनायाः दृश्य-श्रव्य-परान्तर्जालीय माध्यमेन आधारशिला न्यस्ता।**
- **कोरोना-महामार्याः विरुद्धं अखिलेऽपि देशे निर्णायकं युद्धं प्रवर्ततेतराम्।**
- **प्रधानमन्त्री नरेन्द्रमोदी अद्य नैकतलभवनानि सांसदेभ्यः दृश्यश्रव्यमाध्यमेन समर्पयिष्यति।**
- **ए.टी.पी. फाइनल्स् इति व्यावसायिक टेनिसंघ-स्पर्धामालिकायाः निर्णयकचक्रे ह्य डेनिल-मेडवेडीवः डोमिनिक-थीमं पराजित्य निर्णायक स्पर्धां विजितवान्।**

**कोविड ओपनिंग**

**कोरोणामहामार्याः विरुद्धं देशः ऐक्यभावनया युद्धयति। भवन्तोऽपि अस्माभिः सह सुरक्षायाः उपायत्रयस्य सङ्ल्पंक स्वीकुर्वन्तु**

मुखावरंक सन्धारयन्तु

सामाजिकदौर्यं परिपालयन्तु,

पाणिपादं च यथासमयं प्रक्षालयन्तु।

जी-20

प्रधानमन्त्री ह्यः विंशति-सम्मेलने पर्यावरणपरिवर्तनानां विरुद्ध कथं योद्धव्यम् अस्मिन् विषये विशेषेण प्रावोचत्। दृश्यश्रव्यमाध्यमेन सम्मेलनं सम्बोधयन् श्रीमोदी न्यगादीत् यत् जलवायुपरिवर्तनमपि जनसुरक्षायाः अर्थव्यवस्थायाः च संरक्षणेन समं महत्वपूर्णं विद्यते। प्रधानमन्त्रिणा इदमपि उक्तं यत् भारतं न्यूनकौकिलीय-उत्सर्जनस्य क्षेत्रे अपि कार्यं करोति। अपि च इदं न केवल पेरिस-सहमतिपत्रस्य लक्ष्यं परिपूरयति अपितु तदपि अतिक्राम्यति। श्रीमोदीना अभाषि यत् भारतं पञ्चसप्तति-उत्तर-शतं गीगा-वॉटस् नवीकरणीयोर्जायाः लक्ष्यं द्वाविंशति-उत्तर-द्विसहस्रतम-वर्षात् पूर्वमेव प्राप्स्यति।

प्रधानमन्त्री-विंध्याचल

प्रधानमन्त्रिणा नरेन्द्रमोदिना ह्यः उत्तरप्रदेशस्य विन्ध्याचल क्षेत्रान्तर्गतं मिर्जापुर-सोनपुर-जनपदयोः ग्रामीण-पेयजल-आपूर्ति परियोजनायाः दृश्य-श्रव्य-परान्तर्जालीय माध्यमेन आधारशिला न्यस्ता। श्रीमोदी अस्मिन्नवसरे ग्रामीण-जल-स्वच्छता-समितेः सदस्यैः साकं वार्ताः अपि सम्पादितनान् प्रधानमन्त्रिणा प्रोक्तं यत् उत्तरप्रदेशे आभिः योजनाभिः हर-घर-नल-जल परियोजनायां प्रगतिः भविता।

सममेव प्रधानमन्त्रिणा विन्ध्याचल क्षेत्रे त्रयोविंशतिः जलपेयपरियोजनानां आधारशिला संस्थापिता। श्रीमोदी अवादीत् यत् इयं परियोजना न केवलं शुद्धं जलं प्रापयिष्यति अपितु बहून् रोगान् अपि अपवारयिष्यति। तेन प्रोक्तं आगामिकाले यदा पञ्चत्रिंशत् शतं ग्रामाः जलापूर्ति-परियोजनया अनया लाभान्विताः भविष्यन्ति तदा चत्वारिंशत् लक्ष जनानां जीवनं परिवर्तयिष्यते।

कोरोना

कोरोना-महामार्याः विरुद्धं अखिलेऽपि देशे निर्णायकं युद्धं प्रवर्ततेतराम्। साम्प्रतं देशे पञ्चचत्वारिंशत् सहस्राधिक-नूतन-प्रकरणैः साकं देशे सप्ताधिक-अष्टशत्तोत्तर-पञ्चनवति सहस्रोत्तर-नवतिलक्षप्रकरणानि वर्तन्ते येषु सपादपञ्चाशीति लक्षाधिकाः जनाः स्वस्थतांगताः। विगते अहोरात्रे एकाधिक-पञ्चशतं जनाः मृत्युम् उपेताः देशे प्रायः चत्वारिंशत् सहस्रोत्तर-चतुर्लक्ष-सक्रिय प्रकरणानि सन्ति।

दिल्ली कोविड

देशस्य राजधान्यां दिल्ल्यां कोविडमहामारी संक्रमण-तीव्रतां दृष्टिपथं निधान केन्द्रप्रशासनस्य राज्यप्रशासनस्य च शासकीय इतरप्रशासकीय चिकित्सालयेषु पञ्चोत्तरद्विशतं गहनचिकित्सा विभागे रूग्ण शय्यासु वृद्धिः कृता।

गृहमन्त्रालयेणोक्तं यत् केन्द्रप्रशासनस्य चिकित्सालयेषु दिल्ली स्थिते अखिल-भारतीययुर्विज्ञानसंस्थाने ऑक्सीजन सुविधापूर्णाः शय्यानां संख्यासु अपि षोडशाधिक एकशतमितस्य विवर्धनं जातम्।

प्रधानमन्त्री-फ्लैट

प्रधानमन्त्री नरेन्द्रमोदी अद्य नैकतलभवनानि सांसदेभ्यः दृश्यश्रव्यमाध्यमेन समर्पयिष्यति। इमानि भवनानि डॉ.बी.डी. मार्गे नवदिल्ल्यां सन्ति। अष्टौ अशीतिवर्षीयपुरातनानि भवनानि अपि नवीकृतानि। भवनानां निर्माणं अनुमानित व्ययात् चतुर्दशप्रतिशतं न्यूनेन व्ययेन सञ्जातम् अस्ति। लोकसभाध्यक्षः ओमबिरलाः अपि अस्मिन् अवसरे समुपस्थितः भविष्यति।

सेन्ट्रल टीम्स

केन्द्रप्रशासनं हिमाचल-प्रदेश-पञ्जाब-उत्तर-प्रदेश-चेति राज्येषु कोविड-प्रबन्धनाय उच्चस्तरीय दलानि सम्प्रेषयत्। ध्यानास्पदं तथ्यमिदं यत् एतेषु राज्येषु कोरोना इति वैश्विक-संक्रमणस्य प्रकरणानि तीव्रगत्या उपचीयन्ते इति त्रिसदस्यात्मकं केन्द्रीय दलं संक्रमणग्रस्त क्षेत्राणां निरीक्षणं विधास्यति इति। इमानि दलानि संक्रमणम् अवरोद्धुं, निरीक्षणं, प्रतिदर्शपरीक्षणं, संक्रमणग्रस्त-रोगिभ्यः उपचार्यमाणावधौ चिकित्सासौविध्यं चेति विषयेषु राज्येभ्यः सहयोगं उपपादयिष्यन्ति इति। केन्द्रीय दलानि इमानि संक्रमणात् स्वास्थ्यलाभं प्राप्तवतां जनानां निरीक्षणं अवधानता विषये अपि परामर्शं करिष्यन्ति।

अवधेयास्पदं तथ्यमिदं यत् इतः प्राक् हरियाणा-राजस्थान-गुजरात-मणिपुर-छत्तीसगढ-चेति राज्येष्वपि एतादृशानि उच्चस्तरीय-केन्द्रीय-दलानि सम्प्रेषितानि सन्ति।

टेनिस

ए.टी.पी. फाइनल्स् इति व्यावसायिक टेनिसंघ-स्पर्धामालिकायाः निर्णयकचक्रे ह्य डेनिल-मेडवेडीवः डोमिनिक-थीमं पराजित्य निर्णायक स्पर्धां विजितवान्। मेडवेडीवः स्वप्रतिद्वन्द्वीं चतुः षट् सप्त-षट, षट्-चत्वारि इति अङ्क-अन्तरालेन पराजितवान्।